# विज्ञापनम्।

---

इह भारतवर्षे प्राचीनकालमारभ्य अष्टादश-महापुराणानि कृष्ण-द्वैपायन-प्रणीतानि धर्म्मशास्त्रत्वेन समादरणीयतया प्रसिद्धानि। तानि च यवनाधिकार-काले तैः केषाञ्चिदुत्पादनात् मुद्रायन्त्रस्याभावाच्च प्रायेणासुलभानि किन्त्विदानीन्तनैः राजपुरुषैरादृततया देशीय-जातविद्य-महोदयानाञ्च यत्नेन कथञ्चित् सुलभानि बभूवुः। तेषां मध्ये ब्रह्माण्डपुराणे उमा-महेश्वरसंवादमवलम्ब्य महर्षिर्व्यासः कर्म्मज्ञानभक्त्यादीन् विविध-धर्म्मान् राजनीतींश्चोपदेष्टुम् एतदध्यात्मरामायणं निर्म्ममे तच्च प्रथमं बुम्बानगर्य्यां रेवदण्ड-निवासिना महादेव-धर्म्माधिकारिणा परिशोधितं सत् तदनुज्ञया गणपत्कृष्णाजिना पाषाणयन्त्रे मुद्रितमासीत् तस्यापि क्रमशो ग्राहक-गृहीततया निःशेषप्रायताजनि एतस्मादस्माभिर्बहुप्रयत्नेन वाराणसीप्रभृतिस्थानात् पुस्तकानि संगृह्य बहुपुस्तकसंवादपाठग्रहणेन एतदध्यात्मरामायणं श्रीरामवर्म्मकृत-टीकयासमं मुद्रितम्। मुद्रणसमये च यान्याहृतपत्त्रास्तेषां मध्ये काशीस्थ-पुस्तकस्य बुम्बानगरीयमुद्रितपुस्तकेन सह पाठवैलक्षण्यं प्रायेण नापश्याम। किन्तु मद्रदेशस्थ-मद्रासनगरीयपुस्तके पाठान्तरमनेकमपश्यामहि। तेषां

मध्ये सुसङ्गतमात्रमेवात्र निश्चितवन्तोऽविस्पष्टासंलग्नन्तु अजहीम। सङ्गृहीत-पुस्तकाना मध्ये नरोत्तमकृतामपरामेकां टीकामपि अलभामहि तस्याश्च एतट्टीकातो निसृष्टता समालोच्य समुपेक्षितवन्तः। मुद्रणे च यथासाध्यं यत्नमकुर्म्म। अधुना संस्कृतपाठानुरागि-सनातन-धर्म्मबुभुत्सूना समीपे आदरणीयश्चेदिदम् फलितमनोरथा भवेमेति।

कलिकाता।
सवत् १८२८।
१५ आश्विन।

श्रीकालीकिङ्करविद्यारत्नस्य।

## टीकाकारस्य मुखबन्धः।

ओं गणेशाय नमः श्रीरामचन्द्राय नमः।

विधेन मंगलधी पूर्णः शीतकरो परः।
प्रलाह्लादकरो विष्णुभूषणः * कौस्तुभो परः ॥ १ ॥
नाम्ना हिम्मतियर्माभिद्रेर्वेग हिमवानिव।
रूपेण जितकन्दर्पः क्षमायां क्षमया समः ॥ २ ॥
पराक्रमेऽर्जुनः साक्षात्तेजसा भानुमानिव।
भूपानां भ्रष्टराज्यानां पुनाराज्यप्रदायकः ॥ ३ ॥
यं दृष्टार्थिसमूहस्य जातेयं निश्चिता मतिः।
हित्वा पयुत्यं स्वर्लोकं च कामधुक् भूमिमागता ॥ ४ ॥
तस्माज्जातो रामदत्तचन्द्राश्चन्द्र इवापरः।
मित्राणां च रिपूणां च मानदः † प्रथितः प्रभुः ॥ ५ ॥
आसमुद्रं क्षमा देवी यत्कीर्त्या धवलीकृता।
हिमाचलेन समतां नीताः सप्तापि चाचलाः ॥ ६ ॥
यद्दानाम्बुप्रवाहेण मेघोदस्यानपेक्षकाः।
क्षपीवलाः प्रतिदिशं प्रहृष्यन्ति दिने दिने ॥ ७ ॥
तेन श्रीरामभक्तेन सर्वविद्याप्रभाभता।
शृङ्गवेरपुरेशेन रिपुकक्षदवाग्निना ॥ ८ ॥
अर्थिनां कल्पवृक्षेण विद्वज्जनसभासदा।
भट्टनागेशशिष्येण यद्यते रामवर्मणा ॥ ९ ॥
प्रणम्य जानकीजानिं रामं कामातिसुन्दरम्।
चापबाणधरं देवं मायामानुषविग्रहम्। ॥ १० ॥
सेतुः परोपकृतयेऽध्यात्मरामायणाम्बुधौ।
सुशब्दमणिभिः श्लक्ष्णैः प्रीयतां तेन रा[म]ः ॥ ११ ॥

* अत्र विष्णुभूषणत्वेन परमभक्ततया सदा भगवद्हृदयाश्रयत्वमस्य ध्वनितम्।

† मानदः मानदाता मानखण्डकश्च।

# अध्यात्मरामायणम् ।

वालकाण्डम्




प्रथमः सर्गः ।

अप्रमेयत्रयातीतनिर्मलज्ञानमूर्त्तये ।
मनोगिरां विदूराय दक्षिणामूर्त्तये नमः ॥ १ ॥

सूत उवाच ।

कदाचिन्नारदो योगी परानुग्रहवाञ्छया ।
पर्य्यटन् सकलान् लोकान् सत्यलोकमुपागमत् ॥ २ ॥

श्रीमता वाल्मीकिना लोकोद्धाराय च कृते रामचरित्रवर्णनरूपे रामायणाख्यग्रन्थे भगवतो लीलावतारस्य रावणादीनां दृष्टमनुष्यत्वबुद्धये नटवदात्मस्वरूपगोपनेन व्यवहरतः स्वरूपं वाल्मीकिना गुप्तमेव तत्र तत्र निरूपितम् तदेतत्परमदयालुर्भगवान् साक्षाद्वेदव्यासो लोकानां स्फुटं बोधयितुं नारदब्रह्मसम्वादरूपेण ब्रह्माण्डपुराणे अध्यात्मरामायणाख्यां संहितां चक्रे तस्याश्च वाल्मीकिसूचितार्थग्राहकत्वं बोधयितुं वाल्मीकिरामायणवदेव काण्डसर्गोपेतां कृतवान् तां यथामति स्वमतिदोषशुद्धये व्याचक्ष्महे तामेतां संहितां नैमिषारण्ये नैमिषीयान्मुनीन् श्रावयति स्म सूत इत्याह ।

अप्रमेयेति अप्रमेयं त्रयं मायाजीवेश्वररूपं तदतीतस्ततोऽधिकश्चासौ निर्मलं यज्ज्ञानं तत्स्वरूपाय नमः इति वाङ्मनसागोचरायेत्यर्थः ॥१॥

कदाचिदिति योगी योगपक्वकषायतया विदितवेदितव्यः नारदस

इदानीमेकमेवास्ति श्रोतव्यं सुरसत्तम ।
तद्रहस्यमपि ब्रूहि यदि तेऽनुग्रहो मयि ॥ ८ ॥
प्राप्ते कलियुगे घोरे नराः पुण्यविवर्जिताः ।
दुराचाररताः सर्वे सत्यवार्त्तापराङ्मुखाः ॥ ९ ॥
परापवादनिरताः परद्रव्याभिलाषिणः ।
परस्त्रीसक्तमनसः परहिंसापरायणाः ॥ १० ॥
देहात्मदृष्टयो मूढा नास्तिकाः पशुबुद्धयः ।
मातापितृकृतद्वेषाः स्त्रीदेवाः कामकिङ्कराः ॥ ११ ॥
विप्रा लोभग्रहग्रस्ता वेदविक्रयजीविनः ।
धनार्जनार्थमभ्यस्तविद्यामदविमोहिताः ॥ १२ ॥

एकमेव पुण्यहीनानां परलोकमात्रमुपायरूपम् तद्रहस्यमपि मत्कृते ब्रूहि अनुपद परोपकारकरणजपुण्येनायं पूज्यतामित्येव कृपा दया यदि मयीत्यर्थः ॥ ८ ॥

दुराचाररता निषिद्धकर्मनिरता तत्रैव प्रपञ्च सत्यवार्त्तेति "नानृतं वदेत" इति निषिद्धानृतभाषणशीला इति यावत् । ९ । १० ॥

सर्वपापस्य मूलकारणमाह देहात्मदृष्टय इति देहे एवात्मदृष्टिर्येषां ते इत्यर्थः एव च देहनाशेनात्मनाशात् पापपुण्यफलभोक्तुरभावात्तथाऽह-हीना विहिताकरणनिषिद्धकरणयोः प्रवृत्तिरिति भावः स्थूलोऽहं गौरो-ऽहमिति प्रतीतिस्तु शुक्तौ रजतप्रतीतिवद्भ्रम इति तस्य देहस्य परिणामित्वं तु प्रतिक्षणोपचयापचयाभ्यां प्रत्यक्षसिद्धमात्मनोऽविनाशित्वं तु "अविनाशी वा अरेऽयमात्मा" इति श्रुतिसिद्धम् अतएव नास्तिका नास्ति परलोक इति बुद्धिमन्तः पशुबुद्धय आहारविहारमात्रपरा विधिनिषेधानभिज्ञा इत्यर्थः स्त्रीदेवाः स्त्रीजिता इत्यर्थः तयाभक्ष्यस्य भोज्यत्वं च बहुतिथूनम् कामकिङ्करा काम्यकर्ममात्रपरा ॥ ११ ॥

लोभरूपग्रहेण भूतादिना ग्रस्ता वेदविक्रयजीविनः भृतकाध्यापका

त्यक्तस्वजातिकर्म्माणः प्रायशः परवञ्चकाः ।
क्षत्रियाश्च तथा वैश्याः स्वधर्मत्यागशीलिनः ॥ १३ ॥
तद्वत् शूद्राश्च ये केचिद्ब्राह्मणाचारतत्पराः ।
स्त्रियश्च प्रायशो भ्रष्टा भर्त्तृवञ्चननिर्भयाः ॥ १४ ॥
श्वशुरद्रोहकारिण्यो भविष्यन्ति न संशयः ।
एतेषां नष्टबुद्धीनां परलोकः कथं भवेत् ? ॥ १५ ॥
इति चिन्ताकुलं चित्तं जायते मम सन्ततम् ।
लघूपायेन येनैषां परलोकगतिर्भवेत् ॥ १६ ॥
तमुपायमुपाख्याहि सर्वं वेत्ति यतो भवान् ।
इत्यृषेर्वाक्यमाकर्ण्य प्रत्युवाचाब्जजासनः ॥ १७ ॥

धनार्जनफलकतयाऽभ्यस्ता या विद्या तन्मदेन तद्गर्वेण विमोहिताः इतरा-वज्ञाशीलाः ॥ १२ ॥

त्यक्त्वेति अत्र शिष इत्यनुवर्त्तते त्यक्तं स्वजातिकर्म ब्राह्मणजात्युचितं कर्माध्ययनादि यैस्ते परवञ्चकाः परवञ्चना एव धनानुष्ठानवन्तः क्षत्रियादयोऽप्येवमेवेत्याह क्षत्रिया इति स्वधर्मत्यागरूपं शीलं येषां नतु कदाचिदपि धर्मशीला इत्यर्थः ॥ १३ ॥

ब्राह्मणाचारतत्परा इत्यनेन धर्मसंकरो दर्शितः स्त्रियश्चेत्यनेन वर्णसङ्करो दर्शितः भर्त्तृवञ्चने निर्भया निःशंकाः भर्तृवञ्चनेति पाठे 'वष्टि भागुरि' इत्यनेनावस्यादेरकारस्य लोपः ॥ १४ ॥ १५ ॥

परलोकगति भूर्लोकगतिः भूर्लोकोर्ध्वं भुवर्लोकादिगमनम् तच्च दुराचारादिजन्यपापनिर्हरणं विना चित्तशोधकाग्न्यधर्मं विना च दुःसाध्यमिति-भावः ॥ १६ ॥

अस्योद्धारोपायज्ञानं मम कथं स्यादितिचेत्तत्राह सर्वं वेत्तीति यतोभवान् सर्वज्ञ इतिभावः इत्येवमीरितस्य वाक्यमाकर्ण्य अब्जजासनो ब्रह्मा प्रत्युवाचेति ॥ १७ ॥

ब्रह्मोवाच।

साधु पृष्टं त्वया साधो। वक्ष्ये तत् शृणु सादरम्।
पुरा त्रिपुरहन्तारं पार्वती भक्तवत्सला(१) ॥ १८ ॥
श्रीरामतत्त्वं जिज्ञासुः पप्रच्छ विनयान्विता।
प्रियायै गिरिशस्तस्मै गूढं व्याख्यातवान् स्वयम् ॥ १९ ॥
पुराणोत्तममध्यात्मरामायणमिति स्मृतम्।
तत्पार्वती जगद्धात्री पूजयित्वा दिवानिशम् ॥ २० ॥
आलोचयन्ती स्वानन्दमग्ना तिष्ठति सांप्रतम्।
प्रचरिष्यति तल्लोके प्राग्यद्दृष्टवशाद्यदा ॥ २१ ॥
तस्याध्ययनमात्रेण जना यास्यन्ति सद्गतिम्।
तावद्विजृम्भते पापं ब्रह्महत्यापुरःसरम् ॥ २२ ॥

साधु सर्वजनहित यथा पृष्टं अत भारद्वाज वक्ष्ये तदुत्तरमिति शेष तच्छृणु तदेवाह पुरेति त्रिपुरहन्तार शिव भक्तवत्सलेत्यनेन पार्वतीप्रश्नोऽपि स्वभक्तसकलजनकरुणया तदुद्धारार्थमिति सूचितम ॥ १८ ॥

गूढ स्वातिरिक्तानार्द वक्ष्यमाण वस्तु व्याख्यातवान् कथितवानित्यर्थ ॥ १९ ॥

तत कि तत्राह पुराणोत्तममिति पुराणमनादि तच्च तत् उत्तम च श्रवणेन सर्वधर्मजन्यत्वाच्चित्तशुद्धिद्वारा तत्त्वज्ञानकरत्वाच्चेति भाव अध्यात्मरामायणमित्यन्वय अन्यनाम आत्मनीयध्यात्मम आत्मनि चित्तेऽन्तर्यामितया वर्त्तमानो यो रामो रमन्ते योगिनोऽस्मिन्निति व्युत्पत्त्याऽन्तर्यामी तस्यायन चित्तशुद्धिद्वारा प्रापक तत्प्रतिपादकत्वादिति तदध्यात्मरामायणमुत्तरश्लोकस्थे आलोचने इदमेव कर्म ॥ २० ॥

स्वानन्दमग्ना स्वस्वरूपानन्दमग्ना तिष्ठति यत्तत्साम्प्रत युक्तम् एतदालोचनेन स्वस्वरूपानन्दस्य जगदन्तर्यामिरूपस्य सम्यग्भानादिति भाव ॥२१॥२२

(१) भक्तिवत्सल इत्यपि पाठ।

यावज्जगति नाध्यात्मरामायणमुदेष्यति ।
तावत्कलिर्महोत्साहो निःशङ्कं संप्रवर्त्तते ॥ २३ ॥
यावज्जगति नाध्यात्मरामायणमुदेष्यति ।
तावद्यमभटाः शूराः(१) संचरिष्यन्ति निर्भयाः ॥ २४ ॥
यावज्जगति नाध्यात्मरामायणमुदेष्यति ।
तावत् सर्वाणि शास्त्राणि विवदन्ते परस्परम् ॥ २५ ॥
तावत् स्वरूपं रामस्य दुर्बोधं महतामपि ।
यावज्जगति नाध्यात्मरामायणमुदेष्यति ॥ २६ ॥
अध्यात्मरामायणसङ्कीर्त्तनश्रवणादिजम् ।

श्लोकः 'अध्यात्मके तिष्ठति यः परात्मा रामोऽप्यते यत्न हि तत्त्वविद्भिः। अतोऽभिधानं कथितं भवान्यै अध्यात्मरामायणमस्य' येन ॥ १ ॥

येन भवेन सः शिवश्चन्द्रमा वेध इत्यभिधानात् (अयते इत्यर्थं अय्यते प्राप्यते इत्यर्थः) संप्रवर्त्तते जनेष्विति शेषः ॥ २३ ॥

निर्भयाः सञ्चरिष्यन्ति सर्वेषां पापप्रसक्ताभावादिति भावः ॥ २४ ॥

शास्त्राणि न्यायादीनि विवदन्ते विवादं कुर्वते आत्मविषये इत्यर्थः कर्त्ता भोक्ता ज्ञानाश्रय आत्मा परस्परं भिन्न इति काणादा गौतमाश्च षोडशादिपदार्थानां परस्परमात्मनि भेदज्ञानान्मुक्तिरित्यादि च ज्ञानस्वरूपा अनेके जीवात्मनस्तेषां प्रकृत्यादिभ्यो भेदज्ञानान्मोक्ष इति सांख्यादयः एक एव चेतन उपाधिभेदाभासानात्वं प्राप्तः तत्त्वमस्यादिवाक्यजश्रवणमनननिदिध्यास-नैर्ब्रह्मैवाहमिति ज्ञानादुपाधिविलये स्वस्वरूपेणावस्थानमेव मोक्ष इत्युप-निषत्सिद्धान्त अध्यात्मरामायणोदये स्फुटो भविष्यतीति तत्तच्छास्त्रवासना-जन्यो वादो लयमेष्यतीति भावः ॥ २५ ॥

रामस्य स्वरूपं सच्चिदानन्दाद्वयब्रह्मस्वरूपं महतामपि शास्त्रज्ञाना-मपि दुर्बोधं भवतीति शेषः ॥ २६ । २७ । २८ ॥

(१) क्रूरा इति वा पाठः।

फलं वक्तुं न शक्नोमि कार्त्स्न्येन मुनिसत्तम ! ॥ २७ ॥
तथाऽपि तस्य माहात्म्यं वक्ष्ये किञ्चित्तवानघ ! ।
शृणु चित्तं समाधाय शिवेनोक्तं पुरा मम ॥ २८ ॥
अध्यात्मरामायणतः श्लोकं श्लोकार्द्धमेव वा ।
यः पठेद्भक्तिसंयुक्तः स पापान्मुच्यते क्षणात् ॥ २९ ॥
यस्तु प्रत्यहमध्यात्मरामायणमनन्यधीः ।
यथाशक्ति वदेद्भक्त्या स जीवन्मुक्त उच्यते ॥ ३० ॥
यो भक्त्याऽर्चयतेऽध्यात्मरामायणमतन्द्रितः ।
दिने दिनेऽश्वमेधस्य फलं तस्य भवेन्मुने ! ॥ ३१ ॥
यदृच्छयाऽपि योऽध्यात्मरामायणमनादरात् ।
अन्यतः शृणुयान्मर्त्यः सोऽपि मुच्येत पातकात् ॥ ३२ ॥
नमस्करोति योऽध्यात्मरामायणमदूरतः ।
सर्ववेदार्चनफलं संप्राप्नोति न संशयः ॥ ३३ ॥
लिखित्वा पुस्तकेऽध्यात्मरामायणमशेषतः ।
यो दद्याद्रामभक्तेभ्यस्तस्य पुण्यफलं शृणु ॥ ३४ ॥
अधीतेषु च वेदेषु शास्त्रेषु व्याकृतेषु च ।
यत् फलं दुर्लभं लोके तत् फलं तस्य सम्भवेत् ॥ ३५ ॥

अध्यात्मरामायणतः 'सार्वविभक्तिकः पञ्चम्यास्तसि' ॥ २९ ॥

जीवन्मुक्त इति तल्लक्षणं च 'दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः । वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यते' इत्यादिना गीतायाम् उक्तं रामिकेऽपि 'विड्वादौ आत्मस्थाने यो भाव उपजायते । तं भावं भावयन् राम जीवन्मुक्तः सदा भवेत्' ॥ ३० ।३१ ॥

अनादरात् यदृच्छयाऽपि न तु पुराणश्रवणविधुकविधेयेनेत्यर्थः ॥३२। ३२ ।३३ ॥

एकादशीदिनेऽध्यात्मरामायणमुपोषितः ।
यो रामभक्तः सदसि व्याकरोति नरोत्तमः ।
तस्य पुण्यफलं वक्ष्ये शृणु वैष्णवसत्तम ! ॥ ३६ ॥
प्रत्यक्षरं तु गायत्रीपुरश्चर्याफलं भवेत् ।
उपवासव्रतं कृत्वा श्रीरामनवमीदिने ॥ ३७ ॥
रात्रौ जागरितोऽध्यात्मरामायणमनन्यधीः ।
यः पठेत् शृणुयाद्वापि तस्य पुण्यं वदाम्यहम् ॥ ३८ ॥
कुरुक्षेत्रादिनिखिलपुण्यतीर्थेष्वनेकशः ।
आत्मतुल्यं धनं सूर्यग्रहणे सर्वतोमुखे ॥ ३९ ॥
विप्रेभ्यो व्यासतुल्येभ्यो दत्त्वा यत् फलमश्नुते ।
तत् फलं सम्भवेत्तस्य सत्यं सत्यं न संशयः ॥ ४० ॥
यो गायते मुदाऽध्यात्मरामायणमहर्निशम् ।
आज्ञां तस्य प्रतीक्षन्ते देवा इन्द्रपुरोगमाः ॥ ४१ ॥
पठन् प्रत्यहमध्यात्मरामायणमनुव्रतः ।
यद्यत्करोति तत्कर्म ततः कोटिगुणं भवेत् ॥ ४२ ॥

अधीतेष्विति साङ्गवेदाध्ययने शास्त्रार्थाध्ययने च यत्पुण्यं दुर्लभं तत् फलं तस्याध्यात्मरामायणपुस्तकदातुर्भवेदित्यर्थः ॥ २५ । २६ । २७ ।

जागरितः कृतजागरणः ॥ ३८ ॥

आत्मतुल्यं धनं अतिप्रियं वस्त्वित्यर्थः सर्वतोमुखे जले स्थित इति शेषः, 'पुष्करं सर्वतोमुखं' इति जलपर्यायेष्वभिधानात् । ३९॥

व्यासतुल्येभ्य इत्यनेन देशप्रदेयवस्तुकालसंप्रदानविशेषाणां पुण्यातिशयजनकत्वं सूचितम् ॥ ४० ॥

गायते इति पाठे तङार्षः यो गायति मुदेति पाठस्तु युक्त एव ॥४१॥

अनुव्रतः तत्परः ततः स्वभावक्रियमाणकर्मणः ॥ ४२ ॥

तत्र श्रीरामहृदयं यः पठेत् सुसमाहितः ।
स ब्रह्मघ्नोऽपि पूतात्मा त्रिभिरेव दिनैर्भवेत् ॥ ४३ ॥
श्रीरामहृदयं यस्तु हनूमत्प्रतिमाऽन्तिके ।
त्रिः पठेत्प्रत्यहं मौनी स सर्वेप्सितभाग्भवेत् ॥ ४४ ॥
पठन् श्रीरामहृदयं तुलस्यश्वत्थयोर्यदि ।
प्रत्यक्षरं प्रकुर्वीत ब्रह्महत्यां निवर्त्तयेत् ॥ ४५ ॥
श्रीरामगीतामाहात्म्यं कृत्स्नं जानाति शङ्करः ।
तदर्द्धं गिरिजा वेत्ति तदर्द्धं वेद्म्यहं मुने ! ॥ ४६ ॥
तत्ते किञ्चित् प्रवक्ष्यामि कृत्स्नं वक्तुं न शक्यते ।
यज्ज्ञात्वा तत्क्षणाल्लोकश्चित्तशुद्धिमवाप्नुयात् ॥ ४७ ॥
श्रीरामगीता यत् पापं न नाशयति नारद ! ।
तन्न नश्यति तीर्थादौ लोके क्वापि कदाचन ॥ ४८ ॥
तन्न पश्याम्यहं लोके मार्गमाणोऽपि सर्वदा ।
रामेणोपनिषत्सिन्धुमुन्मथ्योत्पादितां मुदा ॥ ४९ ॥

तत्राध्यात्मरामायणमध्ये सुसमाहितः स्थिरचित्तः ॥ ४३ ॥

प्रतिमान्तिके प्रतिमासमीपे ॥ ४४ ॥

यस्तु तुलस्यादिसन्निधौ रामहृदयं पठन् प्रकुर्वीत प्रदक्षिणादीतिशेषः स प्रत्यक्षरं प्रत्यक्षरोच्चारणं ब्रह्महत्यां तज्जन्यं पापं निवर्त्तयेत् आत्मनः श्रोतुश्चेति शेषः ॥ ४५ ॥

अहं ब्रह्मा ॥ ४६ ॥

यत् रामगीतामाहात्म्यम् ॥ ४७ ॥

रामगीता पठ्यमाना इति शेषः कदाचन रविग्रहणादिकालेऽपि स्नाना-दिनेति शेषः ॥ ४८ ॥

मार्गमाणः अन्वेषयन्नपि तत् रामगीतातोऽन्यतया पापनाशकं वस्तु रामगी-

लक्ष्मणायार्पितां गीतासुधां पीत्वाऽमरो भवेत् ।
जमदग्निसुतः पूर्वं कार्त्तवीर्यवधेच्छया ॥ ५० ॥
धनुर्विद्यामभ्यसितुं महेशस्यान्तिके वसन् ।
अधीयमानां पार्वत्या रामगीतां प्रयत्नतः ॥ ५१ ॥
श्रुत्वा गृहीत्वाऽमु पठन्नारायणकलामगात् ।
ब्रह्महत्यादिपापानां निष्कृतिं यदि वाञ्छति ॥ ५२ ॥
रामगीतां मासमात्रं पठित्वा मुच्यते नरः ।
दुष्प्रतिग्रहदुर्भोज्यदुरालापादिसंभवम् ॥ ५३ ॥
पापं यत्तत्कीर्त्तनेन रामगीता विनाशयेत् ।
शालग्रामशिलाग्रे च तुलस्यश्वत्थसन्निधौ ॥ ५४ ॥
यतीनां पुरतस्तद्वद्रामगीतां पठेत्तु यः ।
स तत्फलमवाप्नोति यद्वाचोऽपि न गोचरम् ॥ ५५ ॥
रामगीतां पठन् भक्त्या यः श्राद्धे भोजयेत् द्विजान् ।
तस्य ते पितरः सर्वे यान्ति विष्णोः परं पदम् ॥ ५६ ॥
एकादश्यां निराहारो नियतो द्वादशीदिने ।
स्थित्वाऽगस्त्यतरोर्मूले रामगीतां पठेत्तु यः ॥ ५७ ॥

तार्तीयकं च पद्यमोल्यर्थं (उत्पादितां गीतासुधामिति परश्लोकस्येनान्वय एवमुत्तरेषु द्रष्टव्यम्) ॥ ४९ ॥

गीतासुधामिति रूपकं अमृतरूपा गीतामित्यर्थं अमरस्तत्तुल्य ॥ ५० ॥ कार्त्तवीर्यं सहस्रबाह्वर्जुनं ॥ ५१ ॥

अधीयमानां पठ्यमानां नारायणकलां नारायणरूपत्वम् ॥ ५२ । ५३ ॥

दु प्रतिग्रह असिद्ध प्रतिग्रह 'तिलधेनुर्गजो वाजी मेषाश्वाजिन वस्त्र मणि मालपान शंरभि उभयतोमुखी छयमाना च घोरा प्रतिग्रहा' इत्यादि कठदुक्ता दुर्भोज्य निषिद्धमक्षणम दुरालापोऽसत्भाषादि ॥ ५४ । ५५ । ५६ । ५७ । ५८ ॥

स एव राघवः साक्षात् सर्व्वदेवैश्च पूज्यते।
विना दानं विना ध्यानं विना तीर्थावगाहनम्॥ ५८॥
रामगीतां नरोऽधीत्य तदनन्तफलं लभेत्।
बहुना किमिहोक्तेन शृणु नारद! तत्त्वतः॥ ५९॥
श्रुतिस्मृतिपुराणेतिहासागमशतानि च।
अर्हन्ति नाल्पामध्यात्मरामायणकलामपि॥ ६०॥

अध्यात्मरामचरितस्य मुनीश्वराय
माहात्म्यमेतदुदितं कमलासनेन।
यः श्रद्धया पठति वा शृणुयात् स मर्त्त्यः
प्राप्नोति विष्णुपदवीं सुरपूज्यमानः॥ ६१॥

इत्यध्यात्मरामायणे बालकाण्डे तन्माहात्म्यकथनं नाम
प्रथम सर्ग।

ननु दानादि अनन्तफलं लभेत् अनन्तफलं दानादिफलं तदध्ययनमात्रेण भवेदित्यर्थं॥ ५९॥

श्रुतिर्वेदः स्मृतिर्मन्वादिप्रणीता पुराणानि ब्राह्मादीन्यष्टादश इतिहासो भारतादि आगमाः पञ्चरात्रादय अध्यात्मरामायणस्य तदध्ययनस्य कला षोड़शांशमपि नार्हन्ति तदध्ययनाभीप्सुर्थं सर्वाध्ययनफलत्वादस्येतिभाव॥६०

पठतीत्यत्र तन्माहात्म्याध्याय कर्म॥ ६१॥

इति श्रीमन्मण्डलराजविपदुद्धरणसमर्थैत्यादिविरुदावलीविराजमानस्य हिम्मतिवर्म्मण पुत्रस्य श्रीरामवर्म्मण कृतौ
अध्यात्मरामायणे सेतौ बालकाण्डे तन्माहात्म्यकथनं नाम प्रथम सर्ग।

# अध्यात्मरामायणम् ।

---

## द्वितीय सर्ग ।

यः पृथ्वीभरवारणाय दिविजैः संप्रार्थितश्चिन्मयः
संजातः पृथिवीतले रविकुले मायामनुष्योऽव्ययः ।
निश्चक्रं हतराक्षसः पुनरगाद्ब्रह्मत्वमाद्यं स्थिरां
कीर्त्तिं पापहरां विधाय जगतां तं जानकीशं भजे ॥१॥

शिवपार्वतीसम्वादरूपं अध्यात्मरामायणं वक्तुं भगवान् व्यासो निर्विघ्नार्थं भगवत्स्मरणरूपमङ्गलमाचरति य इति पृथ्व्या यो दुष्टराक्षसादिजनितो भरो भारस्तस्य वारणायेत्यर्थः 'परित्राणाय साधूनां विनाशाय च दुष्कृताम् । धर्मसंस्थापनार्थाय सम्भवामि युगे युगे' इति भगवदुक्ते दिविजैर्देवै रावणपीडितैः सम्प्रार्थितः सन् चिन्मयोऽपि चिद्रूपोऽपि अव्ययोऽपि पृथ्वीतले रविकुले मायामनुष्य संजातः तत्र देवप्रार्थनयाऽयमवतार इत्यर्थो वाल्मीकीये बालकाण्डे पञ्चदशषोडशसर्गयोः स्पष्ट एव अव्ययस्य चिन्मयस्य च कथं जन्म जातस्य च कथं अव्ययत्वसम्भव वस्य नाशाशङ्काभावादत उक्तं मायेति माया नाम सत्त्वासत्त्वाभ्यामनिर्वाच्या सत्त्वरजस्तमोगुणघटितघटनासामर्थ्यवती काचिदीश्वरशक्तिः 'देवात्मशक्तिं स्वगुणैर्निगूढां' इति श्रुतेः 'दैवी ह्येषा गुणमयी मम माया दुरत्यया' इति गीतोक्तेश्च एवं चिन्मयस्याघटितोऽपि मनुष्यभावो जन्मव्यवहारश्च मायाकृत इति भावः तदुक्तं रामतापनीयोपनिषदि 'चिन्मयस्याद्वितीयस्य निष्कलस्याशरीरिणः । उपासकानां कार्यार्थं ब्रह्मणो रूपकल्पना' इति निश्चक्रं निरवशेषं यथा तथा हतराक्षसः जगतां पापहरां स्थिरां कीर्त्तिं विधाय लोके स्थापयित्वा पुनराद्यं ब्रह्मत्वं निरुपाधिब्रह्मरूपमगात् ॥ १ ॥

विश्वोद्भवस्थितिलयादिषु हेतुमेकं
मायाश्रयं विगतमायमचिन्त्यमूर्त्तिम् ।
आनन्दसान्द्रममलं निजबोधरूपं
सीतापतिं विदिततत्त्वमहं नमामि ॥२॥
पठन्ति ये नित्यमनन्यचेतसः शृण्वन्ति चाध्यात्मिकसंज्ञितं शुभम् ।
रामायणं सर्वपुराणसम्मतं निर्धूतपापा हरिमेव यान्ति ते ॥३॥

रामस्तोत्रं ब्रह्मत्वं लक्षणैर्द्रढयति विश्वेति विश्वस्य संसारस्योत्पत्तिलयादिषु
एकं हेतुम् 'यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयं-
त्यभिसंविशन्ति' इति श्रुतेः प्रयन्ति यत्र लीनानि भवन्तीत्यर्थः अनेन निमित्त-
कारणत्वसमानाधिकरणं जगदुपादानकारणत्वं ब्रह्मलक्षणं सूचितम्
एकमित्यसहायार्थकं तेन निमित्तकारणाभेदः सूचितः ननु मिथ्याभूतकार्य-
निरूपितकारणत्वस्यापि मिथ्यात्वाद्ब्रह्मणा सम्बन्धाभावात्कथमस्य लक्षणत्व-
मत आह मायाश्रयमिति मायाश्रयत्वात्तत्कृतमिदमस्य कारणत्वमित्यर्थः
मायिकेन कारणत्वेन मायिक एव ब्रह्मणः सम्बन्ध इति भावः तदुक्तं श्रुतौ
'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्' इति ननु मायाश्रयत्वे जीवं
प्रति स्वस्वरूपमिव स्वं प्रत्यपि एषा माया आवरणं स्यात्तत्राह विगत-
मायमिति विगता माया आवरणशक्तिरूपा यस्मात् एवं प्रति स्वस्वरूपा-
वरणशक्तिरहिता यतीत्यर्थः अचिन्त्यमूर्त्तिम् 'यतो वाचो निवर्त्तन्ते अप्राप्य मन-
सा सह' इति श्रुतेः एवं जगदुत्पत्त्यादिकारणत्वरूपं तटस्थलक्षणमुक्त्वा तेन
रूपेणाप्रमेयत्वात् अथ स्वरूपलक्षणमाह आनन्देति निजबोधरूपमिति 'सत्यं ज्ञान-
मनन्तं ब्रह्म' इति श्रुतेः इदमेव ध्येयरूपममलं उपाधिकृतदोषरहितम् जीव-
रूपाधिकृतकर्तृत्वाद्यभिमानवान् तथा नेश्वर इति भावः निजं स्वाभाविकं
बोधरूपमेव यस्य तम् अनेन रूपान्तरं यत् मायिकमिति सूचितम् विदित-
तत्त्व यथार्थं स्वस्य बोधस्वरूपं येन तम् तेन रामावतारे मोहबोधादि
नटवदनभावमिति सूचितम् ॥ २ ॥
हरिमेव हरिसायुज्यमेव ॥ ३ ॥

अध्यात्मरामायणमेव नित्यं पठेद्यदीच्छेद्भवबन्धमुक्तिम्।
गवां सहस्रायुतकोटिदानात् फलं लभेद्यः शृणुयात् स नित्यम्॥४॥
पुरारिगिरिसंभूता श्रीरामार्णवसंगता।
अध्यात्मरामगङ्गेयं पुनाति भुवनत्रयम्॥ ५॥
कैलासाग्रे कदाचिद्रविशतविमले मन्दिरे रत्नपीठे
संविष्टं ध्याननिष्ठं त्रिनयनमभयं सेवितं सिद्धसङ्घैः।
देवीवामाङ्कसंस्था गिरिवरतनया पार्वती भक्तिनम्रा
प्राहेदं देवमीशं सकलमलहरं वाक्यमानन्दकन्दम्॥६॥

पार्वत्युवाच।

नमोऽस्तु ते देव! जगन्निवास! सर्वात्मदृक् त्वं परमेश्वरोऽसि।
पृच्छामि तत्त्वं पुरुषोत्तमस्य सनातनं त्वञ्च सनातनोऽसि(१)॥७॥

यः शृणुयात् स सहस्रगुणितायुततद्गुणितकोटिसंख्यगोदानादधिकफलं लभेदित्यन्वयः॥ ४॥

पुरारिगिरीति रामार्णवेति च रूपके अध्यात्मरामगङ्गेति अध्यात्मरामशब्दो अध्यात्मरामायणपरस्तदेव गङ्गेति अनेन रूपकेण सर्वमहापातकादीनामपि नाश इतिसूचितं गङ्गायास्तन्नाशकत्वस्य सर्वश्रुतिस्मृतिसिद्धत्वात्॥ ५

सकलमलहरं वस्तु विषयत्वाद्वाक्यस्य सकलमलहरत्वम् आनन्दकंदमितीयविशेषणम् 'एतस्यैवानन्दस्य मात्रामुपजीवन्ति' इति श्रुतेरस्य सर्वानंदमूलत्वेनानन्दकंदत्वम्॥ ६॥

देवो द्योतमान् जगन्निवसत्यस्मिन् जगति निवसतीति वा जगन्निवास- स्तत्संबुद्धि ते तुभ्यं नमः अस्तु यतस्त्वं सर्वात्मदृक् सर्वस्वरूप आत्मा ब्रह्म 'सर्वं खल्विदं ब्रह्म' इतिश्रुतेः तमनियमात्मरूपतया पश्यतीति सर्वात्मदृक् अतएव परमेश्वरोऽसि अत पुरुषोत्तमस्य सर्वेभ्यः पुरुषेभ्य उत्तमस्य तस्यैव

(१) त्वां च सदानतोस्मि इति वा पाठः।

गोप्यं यदत्यन्तमनन्यवाच्यं वदन्ति भक्तेषु महानुभावाः ।
तदप्यहोऽहं तव देव! भक्ता प्रियोऽसि मे त्वं वद यत्तु पृष्टम् ॥८
ज्ञानं सविज्ञानमथानुभक्ति वैराग्ययुक्तञ्च मितं विभास्वत् ।
जानाम्यहं योषिदपि त्वदुक्तं यथा तथा ब्रूहि तरन्ति येन ॥९
पृच्छामि चान्यच्च परं रहस्यं तदेव चाग्रे वद वारिजाक्ष! ।
श्रीरामचन्द्रेऽखिललोकसारे भक्तिर्दृढा नौर्भवति प्रसिद्धा ॥१०

'ब्रह्मण' सनातनं उपाधिरहितं सोपाधेरूपस्य ज्ञानोत्तरं नाशान्न सनातनत्वं तत्त्वं पृच्छामि नन्वसनातनेन मया कथं तद्वक्तुं शक्यमत आह त्वञ्च सनातनोऽसि त्वमपि स एवासीति त्वदज्ञातं न किंचिदितिभावः ॥ ७ ॥

अत्यंतगोप्यम् 'इदं तु ते गुह्यतमं' इतिगीतोक्ते अनन्यवाच्यं भक्तान्येषु वक्तुमयोग्यम् अहो तदपि भक्तेषु वदंति अतो मे पृष्टं यत्तत्तु निश्चयेन वद हेदेव यतोऽहं तव भक्ता ननु मद्भक्ता त्वं कुतस्तत्राह यतस्त्वं मे प्रियोऽसि ॥८

ज्ञानमिति येन ज्ञानेन जनास्तरन्ति पुनर्जन्मादिसंसारं न प्राप्नुवन्ति तत्त्वविज्ञानं ज्ञानं ब्रूहि विज्ञान निदिध्यासनपरिपाकजमपरोक्षज्ञानं तत्सहितं तत्फलकमिति यावत् ज्ञानं श्रवणमननजं परोक्षं ब्रह्मैव सर्वं ब्रह्मैवाहमिति च इति 'तरति शोकमात्मवित्' इतिश्रुते· तद्ब्रूहि तज्जनकवाक्यं ब्रूहीत्यर्थः तज्ज्ञानं न च वैराग्यं विना वैराग्यं च न भक्तिं विनेत्यत आह अनुभक्तिश्चेति भक्ते· पश्चादनुभक्ति जायमानं यद्वैराग्यं तद्युक्तम् तदुपायबोधकवाक्ययुक्तं वैराग्ययुक्त चेत्यर्थ तथा च पातञ्जलसूत्रम् 'दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसंज्ञा वैराग्य' इति अनुश्रवो वेदस्तद्बोधित स्वर्गादिरानुश्रविकः भक्तिरीश्वरानुरागः तथा मितं मितशब्दवत् विभास्वत् विशेषेण भास्वत् श्रुतिमात्रेण झटितीत्यर्थः मत्यायकशब्दबोधजनकवाक्ययुक्तं युतं ब्रूहि यथा योषित् अप्यहं त्वदुक्तं जानामि ॥ ९ ॥

अपि प्रथमतः दृढा भक्तिः प्रसिद्धा नौर्भवति भवसागरतरणायेति शेषः ॥ १० ॥

भक्तिः प्रसिद्धा भयमोचनाय नान्यत्ततः साधनमस्ति किञ्चित्।
तथापि हृत्संशयबन्धनं मे विभेत्तुमर्हस्यमलोक्तिभिस्त्वम् ॥११
वदन्ति रामं परमेकमाद्यं निरस्तमायागुणसंप्रवाहम्।
भजन्ति चाहर्निशमप्रमत्ताः परं पदं यान्ति तथैव सिद्धाः॥१२
वदन्ति केचित्परमोऽपि रामः स्वाविद्यया संवृतमात्मसंज्ञम्।
जानाति नात्मानमतःपरेण संबोधितो वेद परात्मतत्त्वम् ॥१३

तदेवाह भक्तिरिति ततोऽन्यत्साधनं नास्ति चाच्छ्रद्धर्मादि तत्साधनं भवमोक्षजनकतत्त्वज्ञानसाधनं नास्तीत्यर्थः सा सर्वेतरानपेक्षितत्वात् भक्ति परानुरक्तिरीश्वर इति भक्तिमीमांसकशाण्डिल्यसूत्राभ्याम् "इतरेण ज्ञानेन स्वसाधनतयाऽपेक्षितत्वात् सा भक्तिर्मुख्या 'इत्याद्य सूत्रार्थं भक्तिलक्षणपरं च द्वितीयसूत्रम् 'हृत्संशयबन्धनं हृद्गतसंशयविषयं रामस्य अनीश्वरत्वम्' ॥ ११ ॥

निरस्तस्त्यक्तो मायागुणकृतो रागद्वेषादिसम्प्रवाहो येन तम् अप्रमत्ता प्रमादोऽज्ञानं तद्रहिता 'प्रमादं वै मृत्युमहं ब्रवीमि' इति सनत्सुजातीयोक्तेः तत्र हि 'मृत्युर्वै तम' इति श्रुतेर्मृत्युपदेनाज्ञानमिति बोध्यम् तथैव तेन प्रकारेण भजनेनैव सिद्धास्सन्तो ऽनन्तं परं पदं मोक्षं यान्तीत्यर्थः ॥ १२ ॥

परमोऽपि रामः स्वाविद्यया मायया संवृतमावृतमात्मसंज्ञं ब्रह्मसंज्ञं आत्मानं स्वस्वरूपं न जानाति अतः परेण ब्रह्मणा सम्बोधितः परात्मा ईश्वरस्तद्रूपं स्वतत्त्वं वेद जानातीति केचिद्वदन्ति तथा च वाल्मीकीये रावणवधानन्तरं ब्रह्मवाक्यम् 'तमुवाच ततो देवः स्वयम्भूरमितद्युतिः। प्रगृह्य रुचिरं बाहुं स्मारयन् पूर्वदैहिकम्। भवान्नारायणः साक्षाद्देवश्चक्रायुधः प्रभुः' इत्यादि उपदेशसाहचर्यात् भगवत्पादैरप्युक्तं 'ब्रह्मा दाशरथेर्यदद्भुतैवावादुदितम्। तस्य विष्णुत्वसम्बोधेन यत्नात्परमोऽस्थित', इति ॥ १३ ॥

(१) युक्ति इति क्वचित् पाठः।

यदि स्म जानाति कुतो विलापः सीताकृतेऽनेन कृतः परेण।
जानाति नैवं यदि केन सेव्यः समो हि सर्वैरपि जीवजातैः ॥१४॥
अतोत्तरं किं विदितं ? भवद्भिस्तद्ब्रूत(१) मे संशयभेदि वाक्यम् ॥१५॥

श्रीमहादेव उवाच।

धन्यासि भक्तासि परात्मनस्त्वं यज्ज्ञातुमिच्छा तव रामतत्त्वम्।
पुरा न केनाप्यभिचोदितोऽहं वक्तुं रहस्यं परमं निगूढम् ॥१६॥
*त्वयाद्य भक्त्या परिनोदितोऽहं वक्ष्ये नमस्कृत्य रघूत्तमन्ते।*
रामः परात्मा प्रकृतेरनादिरानन्द एकः पुरुषोत्तमो हि ॥१७॥
स्वमायया कृत्स्नमिदं हि सृष्ट्वा नभोवदन्तर्बहिरास्थितो यः।

सीताकृते सीतानिमित्तं विलापः अरण्यकाण्डकिष्किन्धादौ वाल्मीकीये स्पष्ट एव केन सेव्यः अप्रस्तु जीवसंख्यात्वाभावादित्यर्थः ॥ १४ । १५ ॥

परात्मनो ब्रह्मणः ॥ १६ ॥

एवं पार्वत्या पृष्टः शिवो रामस्वरूपमाह राम इति रामः परात्मा ब्रह्मैवेत्यर्थः प्रकृतेरित्यस्यान्य इति अत्रांशगीति च शेषः प्रकृतितत्कार्येभ्योऽन्यत्वात्तैरसंसर्गात् रामः परमेश्वर एवेत्यर्थः जीवस्तु तैरुपाधिभिः संसृष्टः तद्धर्मकर्तृत्वाद्यभिमानवानिति भावः अत एवानादिरेक आनन्दः आद्यन्तशून्यत्वात् अनादिरिति एकश्च "आनन्दं ब्रह्म एकमेवाद्वितीयं ब्रह्म" इति श्रुतिसिद्धं ब्रह्मेत्यर्थः अत एव पुरुषोत्तमः पुरुषेभ्यो जीवेभ्य उत्तमः हि प्रसिद्धमेतदित्यर्थः ॥ १७ ॥

ननु ब्रह्मणः मनुष्यादिदेहधारणं कथमत आह स्वमाययेति अघटितघटनापटीयसा माया 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरं' इति श्रुतिसिद्धा तया इदं जगत् सृष्ट्वा नभोवदन्तर्बहिरास्थितो य 'तत् सृष्ट्वा तदेवानुप्राविशत्' इति श्रुतेः मायया मनुष्यशरीरं रूपशो मायया च तदुक्तं गीताभाष्ये भूतानामीश्वरो नित्यशुद्धमुक्तस्वभावोऽपि स्वमायया देहवानिव जात

(१) मुह्य इत्यपि पाठः।

सर्वान्तरस्थोऽपि निगूढ़ आत्मा स्वमायया सृष्टमिदं विचष्टे ॥१८
जगन्ति नित्यं परितोभ्रमन्ति यत्सन्निधौ चुम्बकलोहवद्धि ।
एतन्नजानन्ति विमूढ़चित्ताः स्वाविद्यया संवृतमानसा ये ॥१९॥

इवयलोकानुग्रहं कुर्वन् लक्ष्यतेस्वप्रयोजनाभावेऽपि भूतानुजिघृक्षया' इति नन्वेवं सर्वगतत्वे सर्वस्य: किमु नेक्ष्यतत्राह सर्वान्तरस्थोऽपि निगूढ आत्मेति 'यः पृथिव्यां तिष्ठन् पृथिव्या अन्तर' इत्यादि श्रुत्या सर्वान्तरस्थत्वेनोक्तोऽपि निगूढ़ः 'एषु सर्वेषु भूतेषु गूढात्मा न प्रकाशते। दृश्यते त्वग्र्यया बुद्धा सूक्ष्मया सूक्ष्मदर्शिभिः' इति श्रुतेः तादृशस्य सत्त्वे व्यवहारकालिकमपि मानमाह स्वमाययेति स्वाज्ञानकल्पितया माययेत्यर्थः अयं भावः नित्यशुद्धादिरूपेश्वरस्वरूपाज्ञानेन तस्याघटितघटनासामर्थ्यापरपर्याया या मायाख्या त्रिगुणा यत्किरूपाधिकल्पितावच्छेदैस्तत्स्वरूपैर्जीवैः कल्पिता सा च स्वसजातीयमेव संसारस्तुद्भावच प्रसूते अतएव तत्स्वरूपज्ञाने सकार्यायास्तस्या नाशः रज्जुज्ञानेनैव रज्जुकल्पितभुजङ्गस्य भयकम्पादिकार्य्यसहितस्य न च जीवैस्तत्कल्पना तत्सृष्टोपाधिभिश्च जीवत्व इत्यन्योन्याश्रयः अनादित्वेनापि परिहारात् नन्वेकस्य तत्त्वज्ञानेन तन्नाशे संसारोच्छेदापत्तिः एकरज्जौ युगपत् द्रष्टॄणां सर्पभ्रमे एकस्य रज्जुज्ञानेन तस्य सर्पभ्रमकार्य्ये भयकम्पादौ निवृत्तेऽपि अन्येषां तद्दर्शनेन तदनिवृत्तिवदुपपत्तेरिति तया सृष्टमिदं विचष्टे पश्यति एव च द्रष्टृत्वेन तत्सिद्धिः 'नान्योतोऽस्ति द्रष्टा' इति श्रुतेः एकेनैवाकाशेनोपाधिभेदात् घटाकाशादिव्यवहारवत् एकेनैव चेतनोपाधिभेदादनेकजीवव्यवहारोपपत्तौ चेतनानेकत्वे मानाभावात् द्रष्टृत्वेन तत्सिद्धिरिति भावः नच तत्तदज्ञानरूपोपाधिविशिष्टस्यैव जीवत्वे जीवस्याज्ञानमिति व्यवहारानापत्तिः भार्य्याविशिष्टस्यैव गृहस्थत्वेऽपि गृहस्थभार्य्येतिवदुपपत्तेरिति दिक् ॥१८॥

चेतनस्वीकारे मानान्तरमाह जगन्तीति जगन्ति जगदन्तःकरणानि यत्सन्निधौ नित्यं परितो भ्रमन्ति स्व स्व चेष्टां कुर्वन्ति अन्यथा सर्व्वस्य जडत्वाच्चेतनाभावे जगदान्ध्यप्रसङ्ग इति भावः ननु 'निष्कलं निष्क्रियं शान्तं' इति श्रुतेः तस्य निष्क्रियतया कथं तेनान्येषां व्यापारसम्पादनमत आह

*स्वाज्ञानमप्यात्मनि शुद्धबुद्धे स्वारोपयन्तीह निरस्तमाये।*
संसारमेवानुसरन्ति ते वै पुत्रादिसक्ताः पुरुकर्मयुक्ताः ॥२०॥
जानन्ति नैवं हृदये स्थितं वै चामीकरं कण्ठगतं यथाऽज्ञाः ॥ २१॥
यथाऽप्रकाशो न तु विद्यते रवौ ज्योतिःस्वभावे परमेश्वरे तथा।
*विशुद्धविज्ञानघने रघूत्तमे विद्या कथं स्यात्परतः परात्मनि ॥२२*

चुम्बकलोहवद्वीति यथा निष्क्रियोऽपि चुम्बकमणिर्लोहं शक्तिविशेषात्सन्निधिमात्रेण चालयति तथा चेतनो निष्क्रियोऽपि स्वमायया वैचित्र्यादेव तानि सन्निधिमात्राद्व्यापारयतीत्यर्थः तदुक्तमाचार्यैः 'अनापन्नविकारः सन्नयस्कान्तवदेव यः। बुद्ध्यादींश्चालयेत् प्रत्यक् सोऽहमित्यवधारयेत्' इति एतन्मायागुणास्पदत्वादिरूपं रामस्वरूपं ये जीवा न जानन्ति अज्ञाने चेदविमूढचेतसः त्रिमूढचेतस्त्वे हेतुः स्वाविद्यया संवृतमानसा इति स्वोपाधिभूतया अविद्यया विद्याविरोधिभावदार्थ्यरूपया संवृतान्तःकरणाः ॥ १९ ॥

अतस्ते जीवाः शुद्धबुद्धे शुद्धसत्त्वं मायादोषानाक्रान्तत्वेन शुद्धे रामस्वरूपे निरस्तमाये स्वाज्ञानवशात् निरस्ता माया येन तादृशे 'मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते' इतिगीतोक्तेः ईदृशे रामे स्वात्मानं शरीरमारोपयन्ति स्वस्मात्स्वात्मानमहमिति जानन्तीत्यागत्य' तेषां दुष्टफलभाक् संसारमिति ते पुत्रादिसक्ताः पुरुकर्मयुक्ताः भूरियज्ञादिकर्मयुक्ताः संसारमेवानुसरन्ति ॥ २० ॥

यथा हि चाक्ष्णा भ्रमता गृहादिकं विनष्टदृष्टेर्भ्रमतीव दृश्यते।
तथैव देहेन्द्रियकर्तुरात्मनः कृतं परेऽध्यस्य जनो विमुह्यति ॥ २२

नाहो न रात्रिः सवितुर्यथा भवेत्
प्रकाशरूपाव्यभिचारतः क्वचित्।
ज्ञानं तथाज्ञानमिदं द्वयं हरौ
रामे कथं स्थास्यति शुद्धचिद्घने ॥ २३ ॥

तस्मात्परानन्दमये रघूत्तमे
विज्ञानरूपे हि न विद्यते तमः।
अज्ञानसाक्षिण्यरविन्दलोचने
मायाश्रयत्वान्न हि मोहकारणम् ॥ २४ ॥

ननु स्वाज्ञानेन राममज्ञं व्यवहरति जन इत्युक्तमयुक्तम् अन्यगतस्यान्यत्रारोपासम्भवादित्याशङ्क्य दृष्टान्ततया मोहं जीव उपपादयति यथा विनष्टदृष्टेर्दोषयुक्तदृष्टेः पुरुषस्य भ्रमताक्ष्णा गृहादिकं भ्रमतीवोत्प्रेक्षेयम् भ्रमतीवेति दृश्यते तेनैव नष्टदृष्टिना पुरुषेणेति शेषः. तथैव देहेन्द्रियावच्छिन्नस्य कर्तुरात्मनोऽन्तःकरणस्याहंकाराख्यस्य कृतं परे सर्वधर्माऽलिप्ते तदनवच्छिन्ने चेतनेऽध्यस्य जनो जीवो विमुह्यति अहं कर्तेति मोहं प्राप्नोति एवं च यथाऽक्षिगतभ्रमणस्य गृहादावारोपः यथा चान्तःकरणधर्मस्य कर्तृत्वादेरात्मन्यारोपस्तथा स्वाज्ञानस्य रामे आरोप इत्याशय ॥२२

भगवति रामे स्वतो ज्ञानमप्यस्तीति पुनरपि दार्ढ्यार्थोक्तं युक्तमेवाह नाह इति सूर्यं प्रति रात्रिदिवसविभागाभावे हेतुः प्रकाशरूपाव्यभिचारतः क्वचित् कदापीत्यर्थः ज्ञानाज्ञानयोर्भगवत्यनवस्थितौ हेतुः शुद्धचिद्घनत्वम् ॥२३

उपसंहरति तस्मादिति परानन्दमये सर्वभूतैरेतदानन्दमात्राया उपजीवनात् विज्ञानरूपे निर्विकल्पकज्ञानरूपे तमोऽज्ञानरूपम् तमसो सम्बन्धे हेतुद्वयम् अज्ञानसाक्षित्वं मायाधिष्ठातृत्वरूपं मायाश्रयत्वं च मोहकारणं तमोऽज्ञानम् यो यन्मायाधिष्ठाता स तद्विषयाज्ञानहीन इति लोके दर्शना-

अत्र ते कथयिष्यामि रहस्यमपि दुर्लभम्।
सीतारामहनूमत्संवादं मोक्षसाधनम्॥ २५॥
पुरा रामायणे रामो रावणं देवकण्टकम्।
हत्वा रणे रणश्लाघी सपुत्रबलवाहनम्॥ २६॥
सीतया सह सुग्रीवलक्ष्मणाभ्यां समन्वितः।
अयोध्यामगमद्रामो हनूमत्प्रमुखैर्वृतः॥ २७॥
अभिषिक्तः परिवृतो वशिष्ठाद्यैर्महात्मभिः।
सिंहासने समासीनः कोटिसूर्य्यसमप्रभः॥ २८॥
दृष्ट्वा तदा हनूमन्तं प्राञ्जलिं पुरतस्थितम्।
कृतकार्य्यं निराकाङ्क्षं ज्ञानापेक्षं महामतिम्॥ २९॥
राम: सीतामुवाचेदं ब्रूहितत्त्वं हनूमते।

दिति भाव' नन्वेवं सति "ब्रह्मा दाशरथेर्यद्वत्कैवल्यानुदत्तम" इत्याद्याचार्य्योक्तेः का गतिरिति चेत् शृणु रावणवधार्थं मनुष्यत्वनाटनाय भगवता सङ्कल्पपूर्वं कृतस्य स्वमाहात्म्याच्छादनस्य तत्र तम'शब्देनोक्ते श्वदोमात् उक्तं हि सर्वेपयारीरके 'सङ्कल्पपूर्वकमभूद्रघुनन्दनस्य नाहं विजान इति कञ्चनकालमेतत् ब्रह्मोपदेशसमरभ्य निमित्तमात्रम् तत्तोत्सर्ज्ज स कृते सति देवकार्ये' इति भागवतेऽप्युक्तम् 'श्लीसङ्गिना गतिरिति प्रथमं चकार' इति॥ २४॥

मरुत्सूनुर्वायुपुत्रो हनूमान्॥ २५॥

रामायणे रामायणप्रवर्त्तके रामावतारकाले इत्यर्थः देवकण्टकं देवद्रोहिणम्॥ २६। २७॥

परिवृत सीतादिभिरिति शेष॥ २८॥

पुरत स्थितं अग्रे स्थितम् अनेन गुरूपसदनं दर्शितम् निराकाङ्क्षं ज्ञानेतरधनादिनिरपेक्षम्॥ २९॥

निष्कल्मषोऽयं ज्ञानस्य पात्रं नौ नित्यभक्तिमान् ॥ ३० ॥
तथेति जानकी प्राह तत्त्वं रामस्य निश्चितम्।
हनूमते प्रपन्नाय सीता लोकविमोहिनी ॥ ४१ ॥

सीतोवाच।

रामं विद्धि परं ब्रह्म सच्चिदानन्दमद्वयम्।
सर्वोपाधिविनिर्मुक्तं सत्तामात्रमगोचरम् ॥ ३१ ॥
आनन्दं निर्मलं शान्तं निर्विकारं निरञ्जनम्।

तत्त्वं मत्स्वरूपतत्त्वं निष्कल्मषोऽयमित्यनेन ज्ञानाधिकारित्वं सूचितम् नौ आवयो ॥ ३० ॥

रामस्य तत्त्वं श्रोतुर्निश्चितं यथा भवति तथा प्राह लोकविमोहिनीत्यनेन बन्धनकर्त्तुरेव बन्धमोक्षे सामर्थ्यमिति दर्शितम् राजाज्ञया बद्धो हि तदाज्ञयैव मुच्यत इति लोके प्रसिद्धम् एवं च भगवतीकृपैव मुख्यं मोक्षकारणमिति दर्शितम् ॥ ३१ ॥

जानकी प्राहेत्युक्तं तदाह राममिति रामं परं ब्रह्म विद्धि 'रमन्ते योगिनोऽनन्ते नित्यानन्दे चिदात्मनि। इति रामपदेनेदं परं ब्रह्माभिधीयते' इति तापनीये पाद्मे चोक्ते सत् बाधहीनं 'सत्यत्वं बाधराहित्यं जगद्बाधैकसाक्षिणः। बाधः किं साक्षिको ब्रूहि नत्वसाक्षिक ईष्यते' इत्युक्तेः चिद् ज्ञानस्वरूपमानन्दं तद्रूपमद्वयम् 'एकमेवाद्वितीयं ब्रह्म' इति श्रुतेः सर्वोपाधिविनिर्मुक्तम् स्थूलसूक्ष्मं सकलोपाधिनिर्मुक्तं 'विराट् हिरण्यगर्भश्च कारणं चेत्युपाधयः। ईशस्य यत्त्रिभिर्हीनं तुरीयं तत्पदं विदुः' इति वार्त्तिकम् किञ्च सर्वोपाधिभिर्धर्मैर्विनिर्मुक्तमस्पृष्टमित्यर्थः सत्तामात्रं वस्तुमात्रे सदिति व्यवहारनियामकमित्यर्थः एतत्सम्बन्धादेव सर्वत्र सदिति व्यवहार इति भावः अगोचरं मनोवचसोरप्यविषयमित्यर्थः 'यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह' इति श्रुते ॥ ३२ ॥

आनन्दं तत्त्वेन विपुलत्वमुपलक्ष्यते 'यो वै भूमा तत् सुखं नाल्पे सुखमस्ति' इति श्रुते. 'निर्मलं रजोहीनं शान्तम् प्रपञ्चोपशमत्वात् 'प्रपञ्चोप-

तत्सान्निध्यान्मयासृष्टं तस्मिन्नारोप्यतेऽबुधैः ।
अयोध्यानगरे जन्म रघुवंशेऽतिनिर्मले ॥ २५ ॥
विश्वामित्रसहायत्वं मखसंरक्षणं ततः ।
अहल्याशापशमनञ्चापभङ्गो महेशितुः ॥ २६ ॥
मत्पाणिग्रहणं पश्चाद्भार्गवस्य मदक्षयः ।
अयोध्यानगरे वासो मया द्वादशवार्षिकः ॥ २७ ॥
दण्डकारण्यगमनं विराधवध एव च ।

सन्निधीति यथेन्द्रजालिकमायाशक्तेस्तत्तन्निष्ठाया ऐन्द्रजालिकं विना न स्वकार्य्यसामर्थ्यं तथास्या शक्तेस्तत्सन्निधानेनैव जगत्स्रष्टृत्वमिति तत्र तदुपचारः यथा गृहिणीवैशिष्ट्येनैव सिद्धस्वरूपस्य गृहस्थस्य स्वसम्बन्धजसद्गुणशयवर्त्तिनी गृहिणी तथा मायावैशिष्ट्येनैव सिद्धस्येश्वरस्य स्वसङ्गजतत्सद्गुणशयवर्त्तिचहमित्याह अतन्द्रिता तत्सद्गुणिते ऽर्थे निरालस्येत्यर्थः तदुक्तं वाल्मीकीये रामं प्रति कालवचनेन 'सङ्क्षिप्येह परान् लोकानेकस्त्वं मायया सह । भार्य्यया शुभया देव्या मां त्वं पूर्वमजीजनत्' इति एवञ्च मद्गतजगत् स्रष्टृत्व देहस्तत्वारोप इति भावः ॥ २४ ॥

यद्यपि मायाशबले ईश्वरे एव जगदुपादानत्वं निमित्तं च 'जगतस्तदुपादानं मायामादाय तामसीम् । निमित्तं शुद्धसत्त्वां तामुच्यते ब्रह्म तद्गिरा' इति अभियुक्तोक्तेस्तथापि विशिष्टस्य विशेषणविशेष्योभयानतिरेकेण मायागतस्य तस्य भगवत्यारोपेणैव तथा व्यवहार इत्याह तदिति यत तत्सान्निध्यान्मया सृष्टमतस्तत्स्रष्टृत्वादि अबुधैस्तत्स्वरूपानभिज्ञैस्तत्रारोप्यते रज्जौ सर्प इवेति भावः एतदेव द्रढयितुं कानिचित्स्वकृतानि तत्रारोप्याणि दर्शयति अयोध्येत्यादि ॥ २५ । २६ । २७ ॥

मायामारीचमरणं मायागृहीतमृगरूपमारीचमरणमित्यर्थः मायासीताहृतिरिति तदुक्तं कूर्मपुराणे उत्तरखण्डे चतुस्त्रिंशेऽध्याये 'रामस्य सुभगा भार्य्या रावणो राक्षसेश्वरः । सीतां विशालनयनां चकमे कालनोदितः । गृहीत्वा मायया वेशं चरन्तीं विजने वने । समाहर्त्तुं मनश्चक्रे

मायामारीचमरणं मायासीताहृतिस्तथा ॥ ३८ ॥
जटायुषो मोक्षलाभः कबन्धस्य तथैव च।
शबर्याः पूजनं पश्चात् सुग्रीवेण समागमः ॥ ३९ ॥
वालिनश्च वधः पश्चात् सीतान्वेषणमेव च।
सेतुबंधश्च जलधौ लङ्कायाश्च निरोधनम् ॥ ४० ॥

किल कामिनी। विज्ञाय सा च तद्वाक्यं स्मृत्वा दाशरथिं पतिम्। जगाम शरणं वह्निमावसथ्यं शुचिस्मिता। प्रणम्य पावकं देवं साक्षिणं विश्वतोमुखम् आत्मानं दीप्तवपुषं सर्वभूतहृदिस्थितम्' इत्याद्यष्ट श्लोकानुक्त्वा 'इति वह्न्यष्टकं जप्त्वा रामपत्नी यशस्विनी। ध्यायन्ती मनसा तस्थौ राममुन्मीलितेक्षणा। अथावसथ्याद्भगवान् हव्यवाहो महेश्वरः। आविरासीत् सुदीप्तात्मा तेजसा निर्दहन्निव। सृष्ट्वा मायामयीं सीतां स रावणवधेच्छया। सीतामादाय रामेष्टां पावकोऽन्तरधीयत। हत्वा तु रावणवधं रामो लक्ष्मणसंयुतः। समादायाभवत्सीतां शङ्काकुलितमानसः। सा प्रत्ययाय भूतानां सीता मायामयी पुनः। विवेश पावकं दीप्तं ददाह ज्वलनोऽपि ताम्। दग्ध्वा मायामयीं सीतां भगवानुग्रदीधितिः। रामायादर्शयत् सीतां पावकोऽसौ सुरप्रियः। एतत्पतिव्रतानां वै माहात्म्यं कथितं मया। स्त्रीणां सर्वाघशमनं मायाचित्तं परं स्मृतं' इति अनेन स्त्रीणामेवंविधोऽग्निप्रवेशो न दोषाय विपरीतं सर्वपापहरश्चेति सूचितम् वाल्मीकीयेऽपि मारीचवधार्थं गते रामे मायाकृतेन रामचन्द्रसदृशशब्देनाक्रोशे कृते लक्ष्मणस्य राम सहायार्थं गमनप्रेरणावसरे अरण्यकाण्डे 'अपि त्वां सह रामेण पर्येयं पुनरागतः। लक्ष्मणेनैवमुक्ता तु रुदन्ती जनकात्मजा। प्रत्युवाच ततो वाक्यं तीव्रबाष्पपरिप्लुता। गोदावरीं प्रवेक्ष्यामि हीना रामेण लक्ष्मण। आबन्धिष्येऽथवा त्यक्ष्ये विषमे देहमात्मनः' विषमे उच्चप्रदेशे स्थित्वा ततः पतनेनेत्यर्थः "पिबामि वा विषं तीक्ष्णं प्रवेक्ष्यामि हुताशनम्। न त्वहं राघवादन्यं कदाऽपि पुरुषं स्पृशे' इति सीतोक्त्या सूचितोऽयमर्थः अन्यदेहं प्रतिज्ञाय रावणशरीरस्पर्शे जगन्मातुः प्रतिज्ञाहानिः स्यात् तस्मात् 'प्रवेक्ष्यामि हुताशनं' इत्यनेन सत्यसंरक्षार्थं पूर्वोक्त-

रावणस्य वधो युद्धे सपुत्रस्य दुरात्मनः।
विभीषणे राज्यदानं पुष्पकेण मया सह ॥ ४१ ॥
अयोध्यागमनं पश्चाद्राज्ये रामाभिषेचनम्।
एवमादीनि कर्माणि मयैवाचरितान्यपि।
आरोपयन्ति रामेऽस्मिन् निर्विकारेऽखिलात्मनि ॥ ४२ ॥

रामो न गच्छति न तिष्ठति नानुशोच-
त्याकाङ्क्षते त्यजति नो न करोति किञ्चित्।
आनन्दमूर्त्तिरचलः परिणामहीनो
मायागुणाननुगतो हि तथा विभाति ॥ ४३ ॥

श्रीमहादेव उवाच।

ततो रामः स्वयं प्राह हनूमन्तमुपस्थितम्।

इति मन्तव्यम् एतदर्थमादेव हनूमत्पुच्छसम्बद्धाग्निना लङ्कादाहोपपत्तिः अन्यथा रावणवधीकृतेन लोकमात्राग्निना कथं तन्नगरदाहः स्यात् एतच्छक्तिप्रवेशे तु तस्य स्वातन्त्र्यहान्या तदुपपत्तिरित्यलम् ॥ ३८।३९।४०।४१॥

एवमादीनि आञ्जनेभ्यो दानादीन्यादिशब्दात् यागादीनि निर्विकारे जन्मादिरहिते आरोपयन्ति एवं जगत्कर्तृत्वादिकमपि मन्निष्ठमेव रामे आरोपयन्तीत्यर्थः ॥ ४२ ॥

निर्विकारत्वमेव रामस्योपपादयति राम इति 'निष्कलं निष्क्रियं शान्तं' इत्यादिश्रुतेः आनन्दमूर्त्तिरानन्दस्वरूपः अचलः कूटस्थोऽतएव परिणामहीनः मायागुणान् मायया सृष्टपदार्थाननुगतः तदधिष्ठानत्वेन-स्थितस्तथा विभाति स्वचिद्रूपो भाति यथा रज्ज्ववच्छेदेन सर्पाकारेण करणपरिणाम इति रज्जुः सर्पात्मना भाति एतदेव विवर्त्तोपादानत्वमित्याहुः स च सर्पाकारोऽन्तःकरणपरिणामः सत्त्वासत्त्वाभ्यामनिर्वचनीय इत्युच्यते एवं प्रपञ्चोऽप्यनिर्वचनीय इति दिक् ॥ ४३ ॥

उपस्थितमात्मनोऽद्वितीयत्वे जीवेश्वरादिव्यवस्था कथमिति जिज्ञासु-

शृणु तत्त्वं प्रवक्ष्यामि ह्यात्मानात्मपरात्मनाम् ॥ ४४ ॥
आकाशस्य यथा भेदस्त्रिविधो दृश्यते महान्।
जलाशये महाकाशस्तदवच्छिन्न एव हि।
प्रतिबिम्बाख्यमपरं दृश्यते त्रिविधं नभः ॥ ४५ ॥
बुद्ध्यवच्छिन्नचैतन्यमेकं पूर्णमथापरम्।
आभासस्त्वपरं बिम्बभूतमेवं त्रिधा चितिः ॥ ४६ ॥
साभासबुद्धेः कर्तृत्वमविच्छिन्ने विकारिणि। .

योऽयमुक्त आत्मा ईश्वर अनात्मा चिदाभासो जीव परमात्मा शुद्धचैतन्यम् ॥ ४४ ॥

तेषां तत्त्वमेव सदृष्टान्तमाह आकाशस्येति एकस्याकाशस्य त्रिविधो भेद महाकाशो जलाशयावच्छिन्न आकाश प्रतिबिम्बाकाशश्चेति भेदात् तदेवाह महानिति महाकाश इत्यर्थ स एव महाकाशो जलाशये तदवच्छिन्न एव भवति तत्रैव जलाशये पर प्रतिबिम्बाख्य दृश्यते एवं नभस्त्रिविध इत्यर्थ ॥ ४५ ॥

एवं दृष्टान्तमुपपाद्य दार्ष्टान्तिकमाह बुद्धीति सर्वबुद्धिसाक्षितया बुद्ध्युपहितं चैतन्यं पूर्णमुपाधिमण्डलस्य विभुत्वाद्विभु सकलबुद्धिसमष्टिरेव मायेति तदवच्छिन्नचैतन्यमीश्वर इत्यर्थ अथापरमाभासस्तत्तद्बुद्धिप्रतिबिम्बभूतो जीव इत्यर्थ अपर बिम्बभूत एव चितिस्त्रिधा इत्यर्थ आभासस्त्वपरं बिम्बभूतमिति पाठे बुद्ध्यवच्छिन्नं चैतन्यमेकमित्यनेनेश्वर पूर्णमथापर इत्यनेन शुद्धमाभासस्त्वपरमिति जीव जीवत्वमेव स्फुटयति बिम्बभूतमिति बिम्बवत्त्वेन जाग्रदस्याभिमानी विशति देहेन्द्रियादिष्विति व्युत्पत्ते एतत् प्रतिबिम्बाकाशस्थानीयमिति त्रिधा चितिरित्यर्थ इत्याहु तत्र द्वौ मिथ्याभूतौ उपाध्योर्मिथ्यात्वात् ॥ ४६ ॥

तस्यैव शुद्धचैतन्ये साक्षीति व्यवहारानुपपत्ति साक्षात् द्रष्टा हि साक्षी न च शुद्धचैतन्ये द्रष्टृत्वमित्यत आह साभासेति आभासेन चेतनप्रतिबिम्बेन सहितायां बुद्धेरन्तःकरणस्येत्यर्थ तद्गत कर्तृत्वमबुद्धे साक्षिचि

साक्षिण्यारोप्यते भ्रान्त्या जीवत्वञ्च तथाऽबुधैः ॥ ४७ ॥
आभासस्तु मृषा बुद्धिरविद्याकार्य्यमुच्यते ।
अविच्छिन्नन्तु तद्ब्रह्म विच्छेदस्तु विकल्पतः ॥ ४८ ॥
अवच्छिन्नस्य पूर्णेन एकत्वं प्रतिपाद्यते ।
तत्त्वमस्यादिवाक्यैश्च साभासस्याहमस्तथा ॥ ४९ ॥

आरोप्यते तेनायं साक्षिपदवाच्य इत्यर्थः अयमाशयः जानातीत्यादावन्तःकरणवृत्तिविशेषरूपा क्रिया ज्ञाधातुवाच्या आभासविशिष्टचैतन्यं आश्रयः परस्पराध्यासेनाभासबुद्ध्योर्विवेकाप्रहात् तदुक्तमाचार्य्यैः 'आत्माभासस्तु तिङ्वाच्यो धात्वर्थश्च धियः क्रिया। उभयश्चाविवेकेन जानातीत्युच्यते मृषा। बुद्धेः कर्तृत्वमध्यस्य जानातीति स उच्यते। तथा चैतन्यमध्यस्य सत्वं बुद्धेरिहोच्यते' इति आत्माभास इति बहुव्रीहिः धियोऽन्तःकरणस्य तदेवाह उभयञ्चेति मृषेति आभासबुद्धितत्क्रियाणां मिथ्यात्वात् अयं व्यवहारोपि मिथ्येत्यर्थः एवञ्च साभासबुद्धिगतद्रष्टृत्वस्याविच्छिन्ने परिच्छिन्ने निर्विकारिणि साक्षिणि बुद्धितादात्म्यापन्नाभासतादात्म्याध्यासेनारोप तथाजीवो नित्यः सत्य इत्यादिव्यवहारात् जीवत्वमपि तत्रारोप्यत इत्यर्थः ॥ ४७ ॥

आत्माभासमादाय नूनं तथा व्यवहारस्तथैव इत्याह आभासस्त्विति तस्य मृषात्वादविद्याकार्यत्वाच्च तथा व्यवहारस्य तमादाय नोपपत्तिरित्यर्थः न दर्पणे मुखमस्ति मिथ्यैवात्र दर्पणे मुखमभादित्येवं सर्व्वसिद्धबाधानुभवात् अतएवाभासविद्याकार्य्यं जीवास्यमुखे आदर्शस्यत्वं स्वाध्यासिकम् न तु वास्तवमिति बोध्यम् आभासासत्यत्वञ्चाकरे प्रपञ्चितम् विस्तरभयान्नेहोच्यते ननूक्तं त्रैविध्यं किञ्चितेर्वास्तवं नेत्याह अविच्छिन्नं विच्छेदो भेदस्तद्रहितम् मन्वेवं त्रिधा चितिरित्यसङ्गतं तत्राह विच्छेद इति भेद इत्यर्थः विकल्पतः उपाध्यध्यासकृत इत्यर्थः एवं जीवानां परस्परं भेदोऽप्यध्यासकृत एवेति बोध्यम् ॥ ४८ ॥

कल्पितभेदवत्वे प्रमाणमाह अवच्छिन्नस्येति अवच्छेदो भेदस्तद्वतः आध्यासिकभेदवतः साभासस्याहमस्तत्त्वमस्यादिवाक्यैः पूर्णेनेश्वरेण एकत्वं

ऐक्यज्ञानं यदोत्पन्नं महावाक्येन चात्मनोः।
तदा विद्या स्वकार्य्यैश्च नश्यत्येव न संशयः॥ ५०॥
एतद्विज्ञाय मद्भक्तो मद्भावायोपपद्यते।

प्रतिपाद्यते तथा सति कल्पितभेदे सति उपपद्यत इति शेषः सर्व्वथाभेदाभावे तदानर्थक्यं वास्तवेऽपि भेदे तदानर्थक्यं वाक्यस्य वचनशतेनाप्यनिवृत्तिरिति भावः अन्तावच्छिन्नस्य साभासस्याहम इत्यनेन त्वं पदार्थो दर्शितः पूर्णेनेत्यनेन तत्पदार्थो दर्शित ॥ ४९ ॥

एतदेव ध्वनयन् तदुपदेशफलमाह ऐक्येति आत्मनोर्जीवेश्वरयोरैक्यज्ञानमहं ब्रह्मेति ज्ञानं यदेति कर्म्मानुष्ठानात्पापक्षये सत्युत्पन्नं 'कषाये कर्म्मभिः पक्के ततो ज्ञानं प्रवर्त्तते' इति स्मृतेः अयं भावः जीवेश्वरयोरुपाधिभिन्नयोरैक्यं श्रुत्योच्यमानं बाधितं सत्तत्त्वं मद्योरुपाधिरहिते लक्षणया बिम्बभूतशुद्धब्रह्मैक्यपरतया पर्य्यवस्यतीति बोध्यम् एतच्चाकरे विस्तरेण प्रपञ्चितं ब्रह्मैक्यज्ञानफलमाह तदेति तादृशज्ञाने सति निर्द्धर्म्मकत्वेन चिन्मात्रतया तत् स्वरूपज्ञानात् तत् स्वरूपाज्ञानरूपा विद्या स्वकार्य्यैः प्रपञ्चैः सह नश्यत्येव न संशय एतेन भट्टपीअवत् कार्य्यजननासामर्थ्यमेव तत्साक्षात्कारेण क्रियत इति पक्षोऽपास्तः तदुक्तमाचार्य्यैः 'सोऽयमित्यादिवाक्येषु विरोधात् तदिदं तयोः। त्यागेन भागयोरेक आश्रयो लक्ष्यते यथा। मायाविद्ये विहायैवमुपाधी परजीवयोः'। अखण्डसच्चिदानन्दं परं ब्रह्मैव लक्ष्यते' यथा सोऽयं देवदत्त इत्यादौ पूर्व्वानुभूततत्स्वरूपतत्तायाः इदानीमनुभूयमानस्वरूपेदन्तायाश्च त्यागेन देवदत्तस्वरूपमात्रं लक्ष्यते मायामुख्याऽदिरविद्या अविद्यारूपेति बोध्यम् अपरोक्षज्ञानं मननादिसंस्कृतान्तःकरणादेव 'दृश्यते त्वग्र्यया बुद्ध्या' इति श्रुतेः अग्र्यया मननादिसंस्कृतया 'शास्त्राचार्य्योपदेशशमदमादिसंस्कृतं मन आत्मदर्शने कारणम्' इति गीताभाष्योक्तेश्चेति दिक् उक्तञ्च नारदीये 'तत्त्वमस्यादिवाक्योत्थज्ञानं मोक्षस्य साधनम्' इति श्रुतिरपि 'तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' इति ॥ ५० ॥

ईदृशज्ञानस्य मुख्यं साधनमाह एतदिति मद्भक्त इतिहेतुगर्भं विशेषणम्

मद्भक्तिविमुखानां हि शास्त्रगर्त्तेषु मुह्यताम् ।
न ज्ञानं न च मोक्षः स्यात्तेषां जन्मशतैरपि ॥ ५१ ॥

इदं रहस्यं हृदयं ममात्मनो
मयैव साक्षात्कथितं तवानघ ।
मद्भक्तिहीनाय शठाय न त्वया
दातव्यमैन्द्रादपि राज्यतोऽधिकम् ॥ ५२ ॥

श्रीमहादेव उवाच ।

एतत्तेऽभिहितं देवि ! श्रीरामहृदयं मया ।
अतिगुह्यतमं हृद्यं पवित्रं पापशोधनम् ॥ ५३ ॥
साक्षाद्रामेण कथितं सर्ववेदांतसंग्रहम् ।
य. पठेत्सततं भक्त्या स मुक्तो नात्र संशयः ॥ ५४ ॥
ब्रह्महत्यादिपापानि बहुजन्मार्जितान्यपि ।
नश्यन्त्येव न संदेहो रामस्य वचनं यथा ॥ ५५ ॥
(१)योऽतिभ्रष्टोऽतिपापी परधनपरदारेषु नित्योद्यतो वा
स्तेयी ब्रह्मघ्न मातापितृवधनिरतो योगिवृंदापकारी ।
य संपूज्याभिरामं पठति च हृदयं रामचन्द्रस्य भक्त्या

मद्भावो मत्सायुज्य भक्ते कारणत्वदार्ढ्याय भक्तिव्यतिरेके कार्यव्यतिरेकमाह मद्भक्तीति शास्त्रगर्त्तेषु शास्त्रबोधितक्रियाकलापरूपगर्त्तेषु ॥ ५१ ॥
ममात्मन मद्रूपस्य चेतनस्य ॥ ५२ । ५३ ॥
सर्ववदान्तसग्रह सर्ववेदान्तप्रतिपाद्यार्थसारसग्रहरूपम ॥ ५४ । ५५ ॥

---

(१) जातिभ्रष्टो इत्यपि पाठ ।

योगीन्द्रैरप्यलभ्यं पदमिह लभते सर्वदेवैः समूज्यम् ॥५६॥

इत्यध्यात्मरामायणे उमामहेश्वरसंवादे बालकाण्डे श्रीरामहृदय
नाम द्वितीय सर्गः।

अतिमहत्त्वीयपादकमतिपापीत्यादि सर्वदेवै पूज्यं पद ब्रह्मलोकं स लभत इत्यन्वय ॥ ५६ ॥

इति श्रीमत्सकलराजविमदुद्धरणसमर्थेत्यादिविरुदावलीविराज-
मानस हिम्मतिवर्मण पुत्रस्य श्रीरामवर्मण कृती
अध्यात्मरामायणे सेती बालकाण्डे
श्रीरामहृदयकथनं नाम
द्वितीय सर्ग ।

---

# अध्यात्मरामायणम् ।

---

तृतीय सर्ग ।

पार्वत्युवाच ।

धन्यास्म्यनुगृहीतास्मि कृतार्थास्मि जगत्प्रभो ।
विच्छिन्नो मेऽतिसंदेहग्रंथिर्भवदनुग्रहात् ॥ १ ॥
त्वन्मुखाद्गलितं रामतत्त्वामृतरसायनम् ।
पिबन्त्या मे मनो देव। न तृप्यति भवापहम् ॥ २ ॥
श्रीरामस्य कथा त्वत्तः(१) श्रुता संक्षेपतो मया ।
इदानीं श्रोतुमिच्छामि विस्तरेण स्फुटाक्षरम् ॥ ३ ॥

श्रीमहादेव उवाच ।

शृणु देवि । प्रवक्ष्यामि गुह्याद्गुह्यतरं महत् ।
अध्यात्मरामचरितं रामेणोक्तं पुरा मम ॥ ४ ॥

अथ पार्वती गिरीशोक्तमभिनन्दति धन्यास्मीति परिसंदेहग्रन्थि यदि रामः परं ब्रह्म तर्हि कथं तस्य शोकादि यदि शोकादिमत्त्वाज्जीव कथं दीपासनमिलाकारो महान् सन्देहरूपो ग्रन्थि विच्छिन्न निवृत्तः ॥१॥

अत्र समस्तमपर्युक्ति नाययति त्वन्मुखाद्रामतत्त्वामृतरसायन रामतत्त्वरूपममृतजनक रसायनं पिबन्त्या मे मनो न तृप्यति ॥ २ ॥

पुनर्विस्तरेण रामकथां पृच्छति श्रीरामस्येति स्फुटाक्षरमिति क्रियाविशेषणम् ॥ ३ ॥

अथ महादेवस्तां कथा विशुद्धात्म श्रोतुमुत्सुकते तत्प्रशंसामाह शृण्विति

---

(१) कथा मत्त इति पाठे कथायामप्यत्र इत्यर्थः ।

तदद्य कथयिष्यामि शृणु तापत्रयापहम्।
यच्छ्रुत्वा मुच्यते जंतुरज्ञानोत्थमहाभयात्।
प्राप्नोति परमामृद्धिं दीर्घायुः पुत्रसंततिम् ॥ ५ ॥

भूमिर्भारेण मग्ना दशवदनमुखाशेषरक्षोगणानां
धृत्वा गोरूपमादौ दिविजमुनिजनैः साकमब्जासनस्य।
गत्वा लोकं रुदन्ती व्यसनमुपगतं ब्रह्मणे प्राह सर्वं
ब्रह्मा ध्यात्वा मुहूर्त्तं सकलमपि हृदा वेद येयात्मकत्वात् ॥ ६ ॥

तस्मात् क्षीरसमुद्रतीरमगमद्ब्रह्माथ देवैर्वृतो
देव्या चाखिललोकहृत्स्थमजरं सर्वज्ञमीशं हरिम्।
अस्तौषीच्छ्रुतिसिद्धनिर्मलपदैः स्तोत्रैः पुराणोद्भवै-
र्भक्त्या गद्गदया गिरातिविमलैरानन्दबाष्पैर्वृतः ॥ ७ ॥

आत्मन इत्यध्यात्मं सर्वात्मनः अंतर्यामितया स्थितस्य रामस्य चरितं तद्वर्णनरूपं काव्यम् ॥ ४ ॥

तापत्रयं आध्यात्मिकाधिभौतिकाधिदैविकाख्यदुःखत्रयम् तत्राद्यं रोगादिजं कामक्रोधादिजं च द्वितीयम् चोरादिनिमित्तं तृतीयं ग्रहाद्यावेशनिमित्तम् ॥ ५॥

कथां प्रस्तौति भूमिरिति रक्षोगणानां भारेण मग्ना स्वाधारजले इति शेषः सत्ता गोरूपं धृत्वा देवादिभिः सहाब्जासनस्य ब्रह्मणो लोकं गत्वा ब्रह्मणे उपगतं स्वयं प्राप्तं सर्वं व्यसनं प्राह स च मुहूर्त्तं ध्यात्वा सकलं दुःखकारणं तन्निवृत्तिकारणञ्च हृदा वेद अजानात् तत्र हेतुः सर्वेषामात्मकत्वात् सर्वस्वरूप्यसमष्टिरूपत्वादित्यर्थं ॥ ६ ॥

तस्मादिति अनन्तरमिति शेषः तदनन्तरं ध्यानानन्तरमित्यर्थः देव्या च भूम्या च सहित इति शेषः अखिललोकहृत्स्थं सर्वान्तर्यामिणमित्यर्थं 'स वा एष आत्मा हृदि' इति श्रुतेः अजरं 'एष महानात्मा अजर' इति श्रुतेः सर्वज्ञं 'यः सर्वज्ञः सर्ववित्' इति श्रुतेः ईशं 'एष सर्वेश्वर' इति श्रुतेः

ततः स्फुरत्सहस्रांशुसहस्रसदृशप्रभः।
आविरासीद्धरिः प्राच्यान्दिशो व्यपनयंस्तमः॥ ८॥
कथञ्चिद्दृष्टवान् ब्रह्मा दुर्दर्शमकृतात्मनाम्।
इन्द्रनीलप्रतीकाशं स्मितास्यं पद्मलोचनम्॥ ९॥
किरीटहारकेयूरकुण्डलैः कटकादिभिः।
विभ्राजमानं श्रीवत्सकौस्तुभप्रभयान्वितम्॥ १०॥
स्तुवद्भिः सनकाद्यैश्च पार्षदैः परिवेष्टितम्।
शङ्खचक्रगदापद्मवनमालाविराजितम्॥ ११॥
स्वर्णयज्ञोपवीतेन स्वर्णवर्णाम्बरेण च॥ १२॥
श्रिया भूम्या च सहितं गरुडोपरिसंस्थितम्।
हर्षगद्गदया वाचा स्तोतुं समुपचक्रमे॥ १३॥

ब्रह्मोवाच।

नतोऽस्मि ते पदं देव! प्राणबुद्धीन्द्रियात्मभिः।
यच्चिन्त्यते कर्मपाशात् हृदि नित्यं मुमुक्षुभिः॥ १४॥

हरिं 'हराम्यहं हि मर्त्तृणां हविर्भागं क्रतौ सदा। वर्णश्च मे हरिर्यस्मात्तस्मा-द्धरिरहं स्मृत' इति श्रुतेः स्तुतिसिद्धनिर्मलहरिविष्णुप्रभृतिपदयुक्तैः पुराणोद्भवैः स्तोत्रैरित्यर्थः भक्तिमूलिकैव च गद्गदवाणी भक्तिजत्वादेवानन्दबाष्पाणां विमलत्वम्॥ ७॥

सहस्रांशुसहस्रं सूर्यसहस्रम्॥ ८॥

अकृतात्मनां ध्यानहीनानां तेजोराशित्वात् कथञ्चिद्दर्शनम्॥ ९। १०।

पार्षदगणाः॥ ११॥

स्वर्णवर्णाम्बरं पीताम्बरम्॥ १२। १३॥

प्राण. क्रियाशक्तिप्रधानोऽयः तेन, कर्मेन्द्रियसंग्रहः बुद्धीन्द्रियाणि श्रोत्रादीनि आत्मा मनस्तैः कारणभूतैर्नतोऽस्मि 'कर्मपाशान्मुमुक्षुभिर्यत्पदं हृदि चिन्त्यते' इत्यन्वयः॥ १४॥

मायया गुणमय्या त्वं सृजस्यवसि लुम्पसि।
जगत्तेन न ते लेप आनन्दानुभवात्मन॥ १५॥
तथा शुद्धिर्न दुष्टानां दानाध्ययनकर्मभिः।
शुद्धात्मता ते यशसि सदा भक्तिमतां यथा॥ १६॥
अतस्तवाङ्घ्रिर्मे दृष्टश्चित्तदोषापनुत्तये।
सद्योऽन्तर्हृदये नित्यं मुनिभिः सात्वतैर्धृतः॥ १७॥
ब्रह्माद्यैः स्वार्थसिद्ध्यर्थमस्माभिः पूर्वसेवितः।
अपरोक्षानुभूत्यर्थं ज्ञानिभिर्हृदिभावितः॥ १८॥
तवाङ्घ्रिपूजानिर्माल्यतुलसीमालया विभो!।
स्पर्द्धते वक्षसि पदं लब्ध्वापि श्रीः सपत्निवत्॥ १९॥
अतस्त्वत्पादभक्तेषु तव भक्तिः श्रियोऽधिका।
भक्तिमेवाभिवाञ्छन्ति त्वद्भक्ताः सारवेदिनः॥ २०॥

गुणमय्या सत्त्वरजस्तमोगुणयुक्तया मायया स्वविषया जगत् सृजसि तेन सृष्ट्यादिना ते नेपोऽहं कर्त्तेत्याद्यभिमानो न तत्र हेतुगर्भं विशेषणम् आनन्दानुभवात्मन आनन्दाभिन्नानुभवरूप आत्मा यस्य तस्य एव च स्वरूपापरोक्षेण सर्वत्र मिथ्या दृष्ट्वा तदभिमानरहित इति भाव ॥ १५॥

दुष्टानां मलिनान्तःकरणानां शुद्धात्मता शुद्धान्तःकरणता ते यशसि गुणकीर्त्तने ॥ १६॥

सात्वतैर्भक्तैः धृतोऽन्तर्हृदये सद्यो दृष्टस्तवाङ्घ्रिर्मे चित्तदोषापनुत्तये अस्त्विति शेष ॥ १७॥

स्वार्थसिद्ध्यर्थं स्वकर्त्तव्यसृष्ट्यादिसिद्ध्यर्थं ज्ञानिभि ध्यानेच्छुभि ॥ १८॥

सपत्निवत् आर्थो हृत्य सपत्नीवदित्यर्थः ॥ १९॥

यत स्वचरणभक्तेषु तव लक्ष्मीतोऽप्यधिका भक्ति प्रीति अतः सारवेदिनस्त्वद्भक्तास्त्वच्चरणयोर्भक्तिमेव वाञ्छन्ति ॥ २०॥

ततः स्फुरत्सहस्रांशुसहस्रसदृशप्रभः।
आविरासीद्धरिः प्राच्यान्दिशो व्यपनयंस्तमः॥ ८॥
कथञ्चिद्दृष्टवान् ब्रह्मा दुर्दर्शमकृतात्मनाम्।
इन्द्रनीलप्रतीकाशं स्मितास्यं पद्मलोचनम्॥ ९॥
किरीटहारकेयूरकुण्डलैः कटकादिभिः।
विभ्राजमानं श्रीवत्सकौस्तुभप्रभयान्वितम्॥ १०॥
स्तुवद्भिः सनकाद्यैश्च पार्षदैः परिवेष्टितम्।
शङ्खचक्रगदापद्मवनमालाविराजितम्॥ ११॥
स्वर्णयज्ञोपवीतेन स्वर्णवर्णाम्बरेण च॥ १२॥
श्रिया भूम्या च सहितं गरुडोपरि संस्थितम्।
हर्षगद्गदया वाचा स्तोतुं समुपचक्रमे॥ १३॥

ब्रह्मोवाच।

नतोऽस्मि ते पदं देव! प्राणबुद्धीन्द्रियात्मभिः।
यश्चिन्त्यते कर्मपाशात् हृदि नित्यं मुमुक्षुभिः॥ १४॥

हरिं 'हराम्यघं हि भक्तानां हविर्भागं क्रतौ तथा। वर्णश्च मे हरिर्यस्मात्तस्मा-द्धरिरहं स्मृत' इति श्रुतेः श्रुतिसिद्धनिर्मलहरिविष्णुप्रभृतिमद्युक्तैः पुराणो-द्भवैः स्तोत्रैरित्यर्थः भक्तिमूर्तिरेव च गद्गदवाणी भक्तिजलादेवानन्दबाष्पाणां विमलत्वम्॥ ७॥

चन्द्रांशुसहस्रं सूर्यसहस्रम्॥ ८॥

अकृतात्मनां ज्ञानहीनानां तेजोराशित्वात् कथञ्चिद्दर्शनम्॥ ९। १०॥

पार्षदगणाः॥ ११॥

स्वर्णवर्णाम्बरं पीताम्बरम्॥ १२। १३॥

प्राणः क्रियाशक्तिप्रधानोऽयः तेन कर्मेन्द्रियसंघः बुद्धीन्द्रियाणि श्रोत्रादीनि आत्मा मनस्तैः कारणभूतैर्नतोऽस्मि 'कर्मपाशान्मुमुक्षुभिर्यत्पदं हृदि चिन्त्यते इत्यन्वयः॥ १४॥

